# आभ[illegible] वासवदत्ता

## श्री वट्टिपल्लि नरकण्ठीरवशास्त्रिणा विरचिता

संपादक :

डा. पुल्लेल श्रीरामचन्द्रः

निदेशक :



संस्कृतपरिषत्, उस्मानियाविश्वविद्यालयः,

हैदराबाद-५०० ००७.

क्री· १९९०

शकाब्दः । १९१२

**ABHINAVAVASAVADATTA**




By
Sri Vattipalli Narakanthirava Sastri

First Edition *1990*

Copies : *500*




PRICE : **10-00**

Published by the Sanskrit Academy
Osmania University
Hyderabad - *500 007.*
India.

---

Printed at : R. K Printers, Hyderabad - *500 001.*

# INTRODUCTION

Sri Vattipalli Narakanthirava Sastri was the descendant of a well-known family of great scholars of Vattipalli, a small Village in the Kurnool District of Andhra Pradesh. He was the son of Sri Sambasiva Sastri and Venkatalakshmamma. He was born in 1869 and died in the 41st year of his age, in *1910*.

Sri Sastri was one of the greatest scholars of his time, in Nyaya, Vedanta and Alankara Sastra and also a great poet of repute. The following are some of his works.

1. काव्यलक्षणवादः
2. अभिनववासवदत्तम्
3. यतिसार्वभौमोपहारः
4. आर्याद्विशतिः
5. विशिष्टाद्वैतमतखण्डनम्
6. कर्मन्दी
7. वेदप्रामाण्यवादः
8. श्रीनिवाससभावर्णनमालिका
9. कपिलेश्वरस्तुतिः

In 'Abhinavavasavadatta'' Sri Narakanthirava Sastri has abridged the well-known prose romance, 'Vasavadatta' of Subandhu in 262 verses (excluding the 34 introductory verses) of Arya metre.

Sri Sastri has a powerful style of his own which is marked with elegance and perspecuity which no reader of discerning mind can miss. It is hoped that this work, like the Kadambarisara of Abhinanda, will be welcomed by the Sanskrit scholars.

I am thankful to Sri Vattipalli Mallinatha Sarma, grandson of the brother of Sri Narakanthirava Sastri for making the manuscript of this work available with permission to publish.

Dated : *15-12-1990.* **P. Sri Ramachandrudu.**

श्रीरस्तु

श्री गणेशाय नमः

# अभिनववासवदत्ता

## देवप्रार्थना

वन्दामहे महेशं वन्दारुजनाभिलषितमन्दारं ।
बृन्दारकमणिमकुटीसन्दानितसूनसुरभिताङ्घ्रियुगम् ॥ १

मदनपरिपन्थिमहिषी मघवप्रमुखैस्सुपर्वभिर्महिता ।
मनसि मम सन्निधत्तां मन्दस्मितमुग्धमधुरमुखकमला ॥ २

निष्प्रत्यूहमुपासे निर्व्याजं निखिलदेवतोपास्यं ।
भञ्जकमबोधतमसां कुञ्जरवदनं महः किमपि ॥ ३

कलये कामपि देवीं कमलासनवल्लभां जगज्जननीम् ।
करकमलकलितवीणां कस्यै चित्कवनकौशल्यै ॥ ४

वदने वाचां देवी यस्य चतुर्मुखमुखेष्विव क्रीडाम् ।
तनुते नमोऽञ्जलिरयं तस्मै वल्मीकजन्मने मुनये ॥ ५

श्रीव्यासकालिदासौ भासश्रीहर्षभारविमयूरान् ।
बिल्हणमल्हणबाणप्रमुखान् प्राचः कवीनहं स्तौमि ॥ ६

## गुरुवन्दनम्

श्री शेषगुरोश्चरणौ प्रणिपत्यालूरुवंशरत्नस्य ।
कृपया साहित्यमिधेष्षोडशवर्षे करोमि कृतिमेताम् ॥ ७

## कविवंशप्रशस्तिः

अस्ति प्रशस्तयशसां नृपतीनां माकवंशरत्नानाम् ।
कार्वेटिपूर्वनगरी गरीयसी हृसितदेवराण्नगरी ॥ ८

त्रिभुवनसर्गस्थितिलयलीलालोलः स वेणुगोपालः ।
यस्यां वसति सलीलं रुक्मिण्या सत्यया च सम्मिलितः ॥ ९

यस्मिञ्छ्रुतयो विरताः परमावधिमश्नुते परत्वमपि ।
स किल सदाशिवदेवो दीव्यति सविधे च नैर्ऋते यस्याः । १०

श्रीमान्कुमारवेङ्कटपेरिमाल्राजेन्द्रचन्द्रमास्तस्याम् ।
विदुषां हृदयचकोरान्धिन्वञ्जयति स्म कीर्तिचन्द्रिकया ॥ ११

यो जननाथोऽगमयद्योजनमेक तुरङ्गमोत्तंसम् ।
हूणनृपैः कृतशपथः पूर्णजवाद्भ्रमयानतोऽप्यग्रे ॥ १२

यस्मिन्शासति पृथिवीं सङ्ख्यावन्तोऽभवन्नसङ्ख्याकाः ।
चित्रं वनीपका अप्यभवन्नवनीपका द्विजास्सकलाः ॥ १३

तस्य बभूवुस्तनयास्त्रय इव वेदास्त्रयो महामहसः ।
हरिहरहिरण्यगर्भाः कृतावतारा इव क्षितौ कुतुकात् ॥ १४

अयमखिलराजहंसप्रकरविमानीकृतिक्षमो भविता ।
इति मत्वेव प्राज्ञश्चक्रे ब्रह्माऽभिधं सुतं प्रथमम् ॥ १५

भवति कवेरानन्दप्रदस्तथा दक्षिणोऽयमवनितले ।
इति सद्वैतीयीकं चक्रे कावेरिराजनामानम् ॥ १६

सकलारातिमहीपतिसमदमदावलमृगेन्द्र एष इति ।
अतनोत्तार्तीयीकं तनयं नृपतिस्ससिङ्गराजाख्यम् ॥ १७

अथ स ब्रह्ममहीपतिरभिषिक्तः पालयन्महीमखिलाम् ।
राजति तेजश्शाली मणिरिव शाणोपलोल्लिखितः ॥ १८

करतलधृतशतकोटिप्रशमितभभृत्प्रकाण्डपक्षबलः ।
भुङ्क्ते राजबिडौजा राज्यस्वाराज्यमखिलमपि ।। १९

विधिरिव सकलकलानिधिरुदधिरिवोद्वेलवाहिनीशानः ।
मधुरिव कृतसुवनश्रीर्जयति श्री ब्रह्मभूपतिर्जगति ।। २०

कीर्तिर्यस्य विधत्ते किरणैश्चान्द्रैः कचाकचिक्रीडाम् ।
तेजोऽपि समं तनुते तरणेः किरणैस्तलातलिविलासम् ।। २१

तस्यास्थानीमण्डपकमलाकरकेलिलोलकलहंसैः ।
अमलैर्विद्वद्रत्नैरलङ्कृते काश्यपैः कलाकुशलैः ।। २२

श्रीमदहोबलनरहरिकरुणाऽपाङ्गैस्तरङ्गिताभ्युदये ।
श्री वट्टिपल्लिवशे विख्याते क्षितितले महाविमले ।। २३

अजनिष्ट वीरराघवभट्टाचार्यस्समस्तशास्त्रज्ञः ।
वाराणस्यां जीवितमनयच्छास्त्रप्रवचनमातन्वन् ।। २४

नागोजी विठरमहोपाध्यायप्राणिनाथ आचार्यः ।
हनुमत्त्र्यम्बकमुख्या यस्य च शिष्यप्रशिष्यपदभाजः ।। २५

तत्तनयेषु प्रथमस्सकलदिगन्तप्रसिद्धपृथुकीर्तिः ।
आसीत्काशीनाथस्तर्कालङ्कारवागीशः ।। २६

दुर्वादमुखरतार्किकगर्वोदयपर्वतौघदम्भोलिः ।
गीर्वहति स्म तदीया गीर्वाणतरङ्गिणीतरङ्गतुलाम् ।। २७

तस्याभूदनुजन्मा साम्बशिवस्सकलशास्त्रनिष्णातः ।
वीरेश्वर इति तनयस्तस्याजनि तादृशः कलानिचये ।। २८

तस्माज्जातोऽस्ति बुधस्साम्बशिवो विदितसाहितीसारः ।
सोऽयं वेङ्कटलक्ष्म्यां नरकण्ठीरवमजीजनत्तनयम् ।। २९

तनुते स एष सुहृदां प्रेरणया न तु कवित्वदर्पेण ।
अभिनववासवदत्तां पद्यमयीं सुभगसन्दर्भाम् ।। ३०

क्व नु वचसामुल्लासः कविकुलचूडामणेस्सुबन्धुसुकवेः ।
क्वाहं जनोऽनभिज्ञः क्व नु मतिरल्पीयसी च मम ॥ ३१

यद्वा दयारसाद्रैः कटाक्षवीक्षाभरैर्गिरां देव्याः ।
समुपेयुषः प्रसादं जगतां त्रितये (ऽस्ति) किन्न्वसाध्यं मे ॥ ३२

यद्यपि सन्त्यतिकुशलास्सन्त्यपि तेषां निबन्धनानि भृशं ।
गृह्णन्त्वमुं प्रबन्धं तथाऽपि सुधियो मयि प्रसन्नदृशः ॥ ३३

शृण्वन्तु शिशोरपि मे सूक्ति सुभगां सुधामुच सन्तः ।
अपि जगति रसोल्लसितां शुकस्य वाचं न कः शृणुते ॥ ३४

## अथ कथाप्रारम्भः

आसीदसीममहिमा महिमान्वितगुणगणोज्ज्वलश्श्रीमान् ।
नाम्ना वितरणभूम्ना चिन्तामणिरिति महीपतिः प्रथितः ॥ ३५

सकलोर्वीपतिमण्डलचूडामणिशाणकोणकषणेन ।
विमलीकृता यदीया राजति पदपद्मनखरमणिराजिः ॥ ३६

अहितकुलधूमकेतुर्महिततनूकान्तिहसितझषकेतुः ।
कन्दर्पकेतुरभवत्तनयो विनयोज्ज्वलस्तस्य ॥ ३७

अथ जातु विदस्ताचलमस्तकमवतरति कुमुदिनीकान्ते ।
मारातपत्रकान्ते दूराध्वविलङ्घनादिव श्रान्ते ॥ ३८

स्वप्ने स राजपुत्रोऽस्वप्नैणाक्षीमिव व्यलोकयत ।
कन्यां त्रिभुवनमान्यामन्यादृशरूपसम्पदा धन्याम् । ३९

सृष्टामिवाङ्गजनुषा दृष्टादृष्टावलग्नलसमानाम् ।
अष्टापदतुलिताङ्गीमष्टादशवर्षदेशीयाम् ॥ ४०

जघनमृगाङ्कपरिधिना रोमालिलतालवालवलयेन ।
काञ्चनकाञ्चीदाम्ना काञ्चन सुषमां नितान्तमञ्चन्तीम् ॥ ४१

अनयोस्तनयोर्घनयोरयि मयि पातो भवेदितीव भिया ।
स्पृशता कृशतां दिशताऽवशतां ललितावलग्नभागेन ।। ४२

स्मरलीलासदनाभ्यां स्मरमोहनचूर्णपूर्णकलशाभ्याम् ।
रुचिरां पयोधराभ्यां हृदयसरःकनककमलमुकुलाभ्याम् ।। ४३

अधरेण पल्लवरुचा मधुरेणाधरयता सुधाऽऽस्वादम् ।
लपमानामसमानामनुरागाब्धिप्रवालशकलेन ।। ४४

वरकुन्दकुट्मलश्रीसदनैरुज्जृम्भमाणमदमदनैः ।
रदनैर्भूषितवदनैर्विलसन्तीं मौक्तिकैश्च कृतकदनैः ।। ४५

तरुणजनहृदयकरिणामालानस्तम्भविभ्रमं दधता ।
नासावंशेन युतां नयनामृतसिन्धुसेतुबन्धेन ।। ४६

रतिपञ्चबाणधनुषोरतिवेलविलासवैखरीभाग्भ्याम् ।
ललितां भ्रूलतिकाभ्यां नयनोत्पललीनमधुपरेखाभ्याम् ।। ४७

परिपूर्णमुखसुधांशोरङ्कूरयता कलङ्कविचिकित्साम् ।
तिलकेनाञ्चितनिटलां मृगमदकर्दमसुसूक्ष्मरचितेन ।। ४८

अथ तां तरलदृगन्तां कान्तां दृग्भ्यां पिबन्निवादरतः ।
जनितेर्ष्ययेव सहसा चिरसेवितया स निद्रया मुमुचे ।। ४९

तदनु स मदनशरालीशरव्यतापन्नमानसस्तरुणः ।
विषसरसीव निमग्नं बुद्धो न शशाक धर्तुमात्मानम् ।। ५०

स तदालिङ्गनकुतुकी क्षणमाकाशे प्रसार्यमाणभुजः ।
सकलासु दिक्षु पश्यन् लिखितामिव तामथाजुहावेत्थम् ।। ५१

एह्येहि चन्द्रवदने मागास्तव चरणदासमवधूय ।
शीतलय मामपाङ्गैरङ्गजसन्तप्तममृतरसभङ्गैः ।। ५२

अयि मयि दयिते दयते दासजने ननु कथं न हृदयं ते ।
मा चिरय सदयमधरं मधुरं मे देहि पातुकामोऽस्मि ॥ ५३

कामिनि कामयमानं कामसमानं निकामलसमानम् ।
मनुजाधिपतनुजातं मामतिसन्धाय किमिति यास्यधुना ॥ ५४

अङ्कमलङ्कुरु बाले! पङ्कजनयने समीहितं कुरु मे ।
किङ्करमुज्जीवय ते मकराङ्कातङ्कमोचनादेनम् ॥ ५५

अथ शय्यातलशयितो निवारिताशेषजनप्रसरः ।
निखिलोपभोगविमुखो निन्ये कृच्छ्रेण दिवसरजनी ते ॥ ५६

तदनु प्राणसमानः प्रियसुहृदस्योपसृत्य मकरन्दः ।
कन्दर्पकेतुमूचे कन्दर्पशरप्रहारपरितप्तम् ॥ ५७

किमिदमसाम्प्रतमयसेऽसाधुजनाचरितमेनमध्वानम् ।
सन्तः प्रेक्ष्य भवन्तं निवसन्ति सखे वितर्कडोलासु ॥ ५८

सम्प्रति लब्धावसरा रचयन्ति सखे खलास्तवानिष्टम् ।
सततमनिष्टोद्भावननिरतं हृदयं हि भवति पिशुनस्य ॥ ५९

कुरु चेतसि मम वचनं चर साधु जनोचिते सखे चरिते ।
विरम विगीताचरितात् स्थिरमात्मानं विधेहि भज धैर्यम् ॥ ६०

इति कथयति मकरन्दे मृदुवचनन्यासहसितमकरन्दे ।
कन्दर्पकेतुरेनं परिमितवर्णां शनैरुवाच गिरम् ॥ ६१

अयमुपदेशावसरो न भवति भवतस्सखे दशां शृणु मे ।
अङ्गान्यङ्गजतप्तान्यङ्गीकुर्वन्ति सपदि भङ्गुरताम् । ६२

पच्यन्त इवाङ्गानि क्वाथ्यन्त इवेन्द्रियाणि सकलानि ।
भिद्यन्त इव विवेकाः कामपि कष्टां दशां प्रपन्नोऽस्मि ॥ ६३

अलमलमनया कथया यदि सौहृदमीहसे निसर्गेण ।
आगम्यतामिदानीममुना साकं जनेन दीनेन ॥ ६४

इत्युक्त्वा तेन समं प्रययौ केनाप्यलक्षितस्सहसा ।
अतिचक्राम तदानीमध्वानमनेकनल्वशतमात्रम् ॥ ६५

तत्र ददर्श मृगेन्द्रत्रस्तकुरङ्गीकुलाकुलोपान्तम् ।
कलशजवचसा संहृतशिखरसहस्रं स विन्ध्यशैलेन्द्रम् ॥ ६६

शिखरचरद्विधाधरगीतश्रवणातिवेलसुखितानाम् ।
चमरीणां हननोत्कैश्शबरैरारचितसानुसम्बाधम् ॥ ६७

बहुकुसुमविचित्राभिर्ललिताभिर्वंशपत्रपतिताभिः ।
परितः प्रहर्षिणीभिः प्रकटितवृत्तक्रमं लतातितिभिः ॥ ६८

शैवालजालकचया शफराक्ष्या कमलमुकुलघनकुचया ।
आवर्तनाभिबिलया परिरब्धं रेवयोर्मिभुजलतया ॥ ६९

अतिलङ्घ्य राजसूनुः कतिपयदूरं कथञ्चिदध्वानम् ।
अञ्चितशाखानिचयं कञ्चन जम्बूतरुं व्यलोकयत ॥ ७०

तदनु स सुमसुकुमारस्तरणिकरस्पर्शविह्वलितगात्रः ।
छायायां तस्य तरोरायासभरालसो विशश्राम ॥ ७१

अथ भुवनत्रयदीपे चरमाचलतुङ्गशृङ्गमारूढे ।
अम्बुजिनीप्रियबिम्बे बिम्बफलाडम्बरं विडम्बयति ॥ ७२

फलमूलान्यादाय प्रादादस्मै प्रियाय मकरन्दः ।
स्वयमपि जग्राहैष प्रियसुहृदुपभुक्तशेषाणि ॥ ७३

प्रतिनवपल्लवतल्पे प्रियसुहृदाकल्पिते स सुष्वाप ।
पश्यन्निव हृत्फलके दयितां सङ्कल्पतूलिकालिखिताम् ॥ ७४

अथ जम्बूतरुशिखरे मिथस्स कलहायमानयोर्भूयः ।
श्रुत्वा शुकशारिकयोः कलकलमाद्ये विभावरीयामे ॥ ७५

श्रुणुवश्शुकशारिकयोरनयोरालापममृतरसमधुरम् ।
इति मकरन्दमवोचत्सुहृदं कन्दर्पकेतुरतिकुतुकी ॥ ७६

अथ कथयामास शुकं प्रकोपतरलाक्षरां गिरं शारी ।
असि शारिकान्तररतः कथमथवा कितव रात्रिरियती ते ॥ ७७

तदनु तदाकर्ण्य शुकः प्रियामयं शारिकामुवाचेदम् ।
भद्रे त्यज मयि रोषं श्रृणु मे कालातिलङ्घने हेतुम् ॥ ७८

दयिते क्वचिदपूर्वा महती प्रत्यक्षलक्षिताद्य कथा ।
तत इयती मे रात्रिर्जाता नान्यत्र यातोऽस्मि ॥ ७९

अथ जातकुतूहलया प्रणयिन्या भूयसा स निर्बद्धः ।
मृदुमधुरवचनरचनैस्सपदि कथां कथयितुं समारेभे ॥ ८०

अस्ति सुविस्तृतविपणिन्यस्तसमस्तप्रशस्तवस्तुगणम् ।
दुस्तरनिस्तुलपरिघं कुसुमपुरं खल्वपास्तदेवपुरम् ॥ ८१

मन्दरगिरिशिखरैरिव मसृणसुधालेपधवलवप्रान्तैः ।
वलिभवनैरिव सुतलोद्भासिभिरुपलक्षितं सदनैः ॥ ८२

मरुतेव सत्पथजुषा विवस्वतेव प्रकृष्टगोपतिना ।
अनुगतमविरतधर्मानुष्ठितिशीलेन पौरजालेन ॥ ८३

सुरसुन्दरीजनेनेवेन्द्राणीसेवनाकुतूहलिना ।
वेश्याजनेन रुचिरं पल्लवरुचिना पिकव्रजेनेव ॥ ८४

सौधैरधिकोत्सेधैर्योधैस्सङ्ग्रामकलितरिपुबाधैः ।
कान्तं दानसनाथैर्यूथैः करिणामनन्यकृतरोधैः ॥ ८५

तत्रास्ति नृपतितिलको नाम्ना श्रृङ्गारशेखरश्श्रीमान् ।
सुरतश्रमसुप्तवधूमणिताटङ्काङ्कितोरुभुजदण्डः ॥ ८६

यश्चारिवीरलक्ष्मीकबरीसुमदामगन्धिकरकमलः ।
धनुषो जीवाकृष्टिं कुर्वञ्छत्रुं गतासुमारचयत् ॥ ८७

यस्मिञ्छासति पृथिवीं मलिनाम्बरता निशासु न जनेषु ।
अधरेषु द्विजघातो रशनाबन्धो विदग्धसुरतेषु ॥ ८८

तस्य गुणरत्नराशिस्सुकुमारा शैलराजतनुजेव ।
अभवदनङ्गवतीति प्रथिता कुलशीलसम्पदा तन्वी ॥ ८९

अनयोरासीत्तनया वासवदत्ता सुरूपमदमत्ता ।
मनसिजविजयपताका भुवनत्रयलोभनीयलावण्या ॥ ९०

अथ तस्याः प्रादुरभूत्तारुण्यं जृम्भमाणलावण्यम् ।
परिणयविमुखी तस्थौ परिणाममुपागतेऽपि तारुण्ये ॥ ९१

अथ जातु चिद्वसन्तो नवकुसुमामोदमूर्छितदिगन्तः ।
विरहितरुणीकृतान्तः प्रादुरभूदेधमानरतिकान्तः ॥ ९२

मधुभरितकामिनीमुखगण्डूषासेकविकचवकुलौघः ।
मञ्जुलमञ्जीराङ्कितयुवतिपदाघातदलितकङ्केलिः ॥ ९३

मदनमदोद्धत तरुणीपरिरम्भोद्भूतकुरवकप्रसवः ।
कलकोकिलकोलाहलकलितप्रणयप्रकोपसम्भेदः । ९४

दलदरविन्दच्योतन्मकरन्दास्वादतुन्दिलमिलिन्दः ।
पिकचञ्चुदलितपाटलमधुधारासारशीकरप्रकरः ॥ ९५

वृन्तविनिर्गतविचकिलविवरे कूजन्मधुव्रतो रेजे ।
कुर्वन्निव कुसुमेषोर्भुवनत्रयविजयशङ्खरवम् ॥ ९६

नवयावकपङ्काङ्किततरुणीचरणप्रहाररागवशात् ।
नवकिसलयापदेशाद्रागमशोकस्तमेव वहति स्म ॥ ९७

पृथुलस्तबकविनम्राकोमलपल्लवसमुन्मिषद्रागा ।
सुललितपुष्पोद्भेदा सहकारमुपेत्य मल्लिका शुशुभे ॥ ९८

स्मरकेलिलोलललाटीलुलितालककुसुमगन्धमेदुरितः ।
कर्णाटकामिनीकुचकस्तूरीपङ्कपरिमलोद्ग्राही ॥ ९९

चोलीकपोलपालीपत्रालीधूलिधूसरितगात्रः ।
रतिखिन्नान्ध्रपुरन्ध्रीनीरन्ध्रस्तननिदाघजलहारी ॥ १००

रतिचतुरमालवीजनपरिणाहिनितम्बबिम्बसंवाही ।
पाटीराचलशिखरादाटीकत मारुतश्शनकैः ॥ १०१

मथनाय बिरहिणामथ मदनस्सज्जीचकार कोदण्डम् ।
उदियाय राजदुहितुर्हृदये कान्तोपभोगचिन्ताऽपि ॥ १०२

शृङ्गारशेखरोऽथ श्रुत्वा तनयास्वयंवरोत्सुकताम् ।
निखिलमहीतलवसतीन् नृपतीनेकत्र मेलयाञ्चक्रे ॥ १०३

अथ दह्यमाननूतनकृष्णागरुधूमपरिमलाकृष्टैः ।
मधुपकुलैर्बहुलीकृतघुमघुमरवमुखरिताशान्तम् ॥ १०४

अतिरभसहासलहरी परिमलपरिमिलितगगनभूवलयम् ।
परिहासकथाव्याहृतिविदग्धशृङ्गारमयजनाकलितम् ॥ १०५

नानादेशनृपालैः कृतोपवेशं स्वयंवरोद्देशम् ।
आनिन्युर्नृपतनयां पौरपुरन्ध्र्यो निदेशतो राज्ञः ॥ १०६

समलञ्चकार काञ्चनमञ्चं कञ्चित्प्रपञ्चविस्मयदं ।
घनवन्दिघोषमुखरितदिगन्तरं बिजयसमरमिव तन्वी ॥ १०७

न्यपतत्तदा तदङ्गे नृपतनयानां क्षणाद्दृशां विततिः ।
विकचारविन्दगर्भे मधुकरमालेव सौरभाकृष्टा ॥ १०८

दृष्ट्वा तानथ मञ्चाविष्टानेकैकशश्शशाङ्कमुखी ।
रक्ता नासीदेतद्युक्तं सैषा यतः स्वयं श्यामा ॥ १०९

कर्णीरथावतीर्णा कर्णान्तविशाललोलनयनान्ता ।
पूर्णेन्दुबिम्बवदना तूर्णं निजमाससाद सा सदनम् ।। ११०

तस्यामेव रजन्यां क्षितिपतिकन्या व्यलोकयत्स्वप्ने ।
अङ्गजमिवाङ्गभाजं कञ्चित्तरुणं समुल्लसद्रूपम् ।। १११

कबरिकया मालिन्या नासिकया तुङ्गभद्रया कीर्त्या ।
स्ववर्णाहिन्या वाचा नर्मदया पुण्यसिन्धुरूपमिव ।। ११२

मूलं शृङ्गारतरोरेकायतनं सरस्वतीलक्ष्म्योः ।
क्रीडासदनं कान्तेर्लावण्यधनस्य कोशगृहम् ।। ११३

वैदग्ध्यस्यायतनं रोहणशैलं गुणोरुरत्नानाम् ।
प्रभवमहीध्रं सुन्दरकन्दर्पकथामहाचरिताम् ।। ११४

सौन्दर्यस्यादर्शं निरुपमसौशील्यसम्पदां सदनम्
विद्यालतावऽऽवलीनामावालं कौतुकालयं कीर्तेः ।। ११५

स्वप्नगतैव मृगाक्षी विस्मयमाना विलोक्य तद्रूपम् ।
तं चिन्तामणिनृपतेस्तनयं कन्दर्पकेतुमश्रौषीत् ।। ११६

अथ सा व्यपगतनिद्रा तद्राजसुतावलोकदुर्ललिता ।
शय्यातले शयाना चेतस्येवं चकार भृशदूना ।। ११७

मदनो नु स चानङ्गो नासत्यः किं न चाद्वितीयस्सः ।
अथवाऽन्यजन्मनि कृतं सुकृतं ये मूर्तमुपनतं मन्ये ।। ११८

शङ्के पङ्कजजनुषा दर्शितमेतस्य रूपनिर्माणे ।
निजकौशल्यमशेषं कथमथवा कान्तिरीदृगेतस्य ।। ११९

वैदर्भी नलहेतोर्व्यर्थं वैशसमवाप विपिनेषु ।
सा भोजराजतनुजा महिषीभूताऽप्यजानुरक्ताऽसीत् ।। १२०

दुर्वाससाऽभिशप्ता दुष्यन्तकृते शकुन्तला व्यर्थम् ।
ऊरुश्रीजितरम्भा रम्भा नलकूबरं चकमे ।। १२१

ऋद्धिस्सहतबुद्धिर्व्यर्थं चकमे स्वयंवरे धनदम् ।
मुग्धा पुलोमतनया वृद्धश्रवसे वृथा स्पृहामकरोत् ।। १२२

इति मनसि चिन्तयन्ती दिशि दिशि दीनां दृशं समुञ्झन्ती ।
मदनव्यथां भजन्ती साऽऽसीद्विरहाम्बुधौ निमज्जन्ती ।। १२३

शयितेव विरहमुर्मुरमध्ये स्मरदवशिखोपगूढेव ।
अविरलवसन्तकालानलकीलाजालकबलिताङ्गीव ।। १२४

मलयाचलनिलयानिलरुद्रक्रोधानलावलीढेव ।
उन्मादभूगृहान्तःपतितेवाजनि विनष्टकरणेव ।। १२५

लिखितमिवोत्कीर्णमिव प्रत्युप्तमिवात्मनि प्रविष्टमिव ।
मज्जारसशबलितमिव कीलितमिव वज्रसारघटितमिव ।। १२६

रुधिराशये द्रुतमिव प्रचुरतरं पललसंविभक्तमिव ।
कन्दर्पकेतुमात्मनि मेने कन्दर्पपीडिता तरुणी ।। १२७

उन्मत्तेवान्धेव च बधिरेव च मूकतां प्रपन्नेव ।
शून्येव निरस्तेन्द्रियनिकरेव ग्रहगृहीतेव ।। १२८

यौवनसागरविचलत्कल्लोलपरम्परापरीतेव ।
स्मरविशिखकीलितेव प्रकृष्टतररागरज्जुबद्धेव ।। १२९

शृङ्गारभावनाविषरसनिर्भरघूर्णिताखिलाङ्गीव ।
स्मरतापमसहमाना सरसिजनयना सखीरुवाचैवम् ।। १३०

प्रियसख्यनङ्गलेखे हृदये मे वितर पाणिपद्मं ते ।
अयि सिञ्च मदनमञ्जरि चन्दनरसकर्दमेन कुचयुगलीम् ।। १३१

सरले वसन्तसेने संवृणु कबरीभरं मम स्रस्तम् ।
तरले तरङ्गवति भो कैतकधूलिं ममाङ्गके विकिर ॥ १३२

अङ्गानि मदनमालिनि शैवालकलापकेन वीजय मे ।
अयि विलिख चित्रलेखे चित्रपटे चित्तहारिणं तरुणम् । १३३

भामिनि विलासवति भो मौक्तिकचूर्णं विनिक्षिपाङ्गेषु ।
रागवति रागलेखे कुचयुगलं स्थगय मे सरोजदलैः ॥ १३४

अयि कान्तिमति सुकान्ते परिमृज मे बाष्पबिन्दुबृन्दानि ।
ननु यूथिके प्रचारय मृदुपवनान्कदलिकादलव्यजनैः ॥ १३५

इति बहुविधं वदन्ती मुमूर्छ बाला सखीजनेन समम् ।
अथ शीतलोपचारैः परिजनविदितैर्गृहीतचैतन्या ॥ १३६

क्षणमतिशिशिरमनोहरघनसाररसाकुलापगापुलिने ।
क्षणमतिशीतलमलयजरसमयतटिनीतटप्रान्ते ॥ १३७

क्षणमरुणकाञ्चनाम्बुजकान्तसरस्तीरचन्दनच्छाये ।
क्षणमलसपवनतरलितदलकदलीकाननान्तरालेषु ॥ १६८

क्षणमभिनवापचितमृदुकिसलयकुसुमोपरचितशय्यासु ।
क्षणमम्बुजिनीप्रस्तरतुषारसङ्घातशीतलशिलासु ॥ १३९

निन्ये मुहुः परीजनैः प्रत्युत सन्दीपितश्च विरहाग्निः ।
कल्पान्तकालनिर्यद्द्वादशरविकरकलाप इव तीव्रः ॥ १४०

दुग्धोदवीचिविशदस्मितलसदधरोष्ठहारि तद्वदनम् ।
द्विजकुलमिव तल्लोचनयुगलं श्रुत्यन्तसङ्गकमनीयम् ॥ १४१

नैसर्गिकमामोदं वदनस्याघ्रातुमभिलषन्तीव ।
दूरं विनिर्गता तन्नासालक्ष्मीर्जगद्विमोहकरी ॥ १४२

अकलङ्कसितांशुकलाकोमलपीयूषफेनपाण्डुश्रीः ।
तद्दन्तपङ्क्तिरनुपममनङ्गमतिशायि तद्रूपम् ।। १४३

धन्यास्ते भुवि विषयास्स्थानानि च तानि सुकृतभरितानि ।
नामाक्षराणि तान्यतिधन्यानि च यान्यलङ्कृतान्यमुना ।। १४४

इति मनसि भावयन्तौ तस्थौ तमितस्ततश्च पश्यन्ती ।
लिखितमिव नभसि नयने बिम्बितमिव चित्रर्दाशितं चैव ।। १४५

अत्रान्तरे विदग्धा तमालिका नाम शारिका तस्याः ।
कन्दर्पकेतुभावं ज्ञातुं प्रहिता सखीभिरालोच्य ।। १४६

अविलम्बितगतिरेषा मामनुयाता विलोक्यतामत्र ।
तिष्ठति तरोरधस्तादिति कथयित्वा शुकस्स विरराम ।। १४७

तच्छ्रुत्वा नृपतनयस्सत्वरमुत्थाय तामथाहूय ।
निजगाद मिजमुदन्तं निखिलं निर्मुक्तसन्तापः ।। १४८

विततार लेखमथ सा विरचितविनतिस्तमालिका तस्मै ।
आनन्दसिन्धुमग्नो मकरन्दस्स्वयमवाचयत्कुतुकात् ।। १४९

प्रत्यक्षदृष्टभावाऽप्यस्थिरहृदया हि कामिनी भवति ।
स्वप्नानुभूतभावा द्रढयति न प्रत्ययं युवतिः ।। १५०

तस्मिन् लिखितामेतामार्यामाकर्ण्य हर्षरसपूर्णः ।
अमृतार्णवमग्नमिवामन्यत कन्दर्पकेतुरात्मानम् ।। १५१

परिरभ्य निर्भरं तां प्रसारितायामशालिभुजयुगलः ।
अयि शारिके ! प्रिया मे कथमास्ते किं करोति किं वदति ।। १५२

इति वासवदत्ताया वृत्तान्तमशेषमादरात्पृच्छन् ।
नीत्वा तया सह निशां स सुहृत्कन्दर्पकेतुरुच्चलितः ।। १५३

अत्रान्तरे विवस्वान् वृत्तान्तमिमं स्वयं निवेदयितुम् ।
मध्यमलोकमवातरदध्यधिकध्वान्तसन्ततिक्षपणः ॥ १५४

अथ चक्रवाकचेतस्सङ्क्रामिततताप इव रुचामधिपे ।
उद्वहति मन्दिमानं मन्दारस्तबकसुन्दराकारे ॥ १५५

दिनताम्रचूडचूडाचक्राकारप्रकामरमणीये ।
सिन्दूरराजिरञ्जितसुरराजद्विरदकुम्भसच्छाये ॥ १५६

नटनचलच्छिवमकुटीदृढबद्धफणीन्द्रकर्णपूरनिभे ।
सन्ध्यासीमन्तवतीसरसालक्तकृतपत्त्रलेखाऽऽभे ॥ १५७

कालकरवालखण्डितदिनमहिषस्कन्धचक्रसङ्काशे ।
मज्जत्यपरपयोधौ सरोजिनीप्राणवल्लभे भानौ ॥ १५८

शिखरिषु कलहसमाकुलकलविङ्कारावभरितशिखरेषु ।
क्षुद्रासु गाढकौतुकविरचितकन्दर्पमुद्रासु ॥ १५९

कापेयविकलकपिकुलकलितेष्वाश्रमसमीपवृक्षेषु ।
निर्जिगमिषति जरत्तरुकोटरवास्तव्यकौशिकव्राते ॥ १६०

मुखरितधनुषि विवर्षति शरनिकरमशेषधीमुषि मनोजे ।
कृतयष्टिसमारोहणलीलेषु निशान्तबर्हिजालेषु ॥ १६१

मञ्जिष्ठारागारुणशिखरपताकेव गगनहर्म्यस्य ।
सन्ध्या क्षणाददृश्यत कन्दर्परथस्य कनककेतुरिव ॥ १६२

मांसलितमिव कृशाङ्गीकुन्तलसंस्कारधूपपटलेन ।
पेचकिकपोलविगलद्दानधुनीशीकरैर्विवृद्धमिव ॥ १६३

प्रावरणमिव रजन्याः पलितौषधमिव च वृद्धवेश्यानाम् ।
तिमिरमराजत परितस्तरुणतमालतरुकानमच्छायम् ॥ १६४

भुवनत्रयविजिगीषाप्रस्थानायोद्यतस्य कुसुमेषोः ।
लाजाञ्जलयो रतिकरकीर्णा इव नभसि तारका रेजुः ।। १६५

रविविरहातुरनलिनीमन इव भिन्नं द्विधा रथाङ्गयुगम् ।
उदजृम्भतान्धकारं शार्वरमीशगलकालिमोदारम् ।। १६६

अथ रजनिराजकन्याकन्दुक इव मदनकनकमुकुर इव ।
उदयमवाप शशाङ्को गगनमहासौधहेमकुम्भ इव ।। १६७

भुवनत्रयविजिगीषोरतनोः प्रस्थानपूर्णकुम्भ इव ।
प्राचीवधूललाटप्रवॢप्तबन्धूककुसुमतिलक इव ।। १६८

उदयगिरिशृङ्गसङ्गतसुन्दरमन्दारकुसुमगुच्छ इव ।
आखण्डलदिग्योषाकुङ्कुमपङ्कारुणस्तनाग्रमिव ।। १६९

अत्रान्तरे बभूवुस्संवादाः प्रियतमेषु दूतीनाम् ।
कुलटाभिः प्रहितानामित्थं द्व्यर्थास्सविस्तरास्सरसाः ।। १७०

आत्मानमवस्त्रीकृतमाकलयसि तत्त्वतो न कान्तत्वं ।
चिन्तयसि दुर्लभा तां चेतसि कान्तां सखेदमिव कान्त ।। १७१

वीरस्स सम्प्रहाराद्यः प्रतिपक्षस्य कुञ्जरान्नयति ।
भुवि राजसेनरहितो नूनं त्वं राजसेन रहितोऽसि ।। १७२

आश्रयति जीवनायकमिव सुभगं जीवनायक न लोके ।
म्रदिमाकरेण ललिता करेण सम्पूर्णचन्द्रवदना सा ।। १७३

अथ जगदामुमुदे च श्वेतद्वीपान्तरे निविष्टमिव ।
दुग्धार्णवमग्नमिव स्फाटिकसदनप्रविष्टमिव ।। १७४

अथ विघटमानदलपुटकैरवमधुबिन्दुपानमुदितानाम् ।
मदमधुकरनिकराणां कलकलनादेन मुखरितदिगन्ते ।। १७५

ज्योत्स्नापानभरालसचकोरमिथुनाभिनन्दितागमने ।
रतिखिन्नपुलिन्दवधूस्वेदाम्बुकणापहारनिष्णाते ॥ १७६

मलयाचलसम्भूते मृदुवाते वाति सहतमालिकया ।
वासवदत्तानगरं प्रापत् कन्दर्पकेतुमकरन्दौ ॥ १७७

तदनुप्रविश्य नगरीं त्रिभुवनरमणीयमेकदेशगतम् ।
ऐक्षत वासवदत्ताभवनं भवनन्दनप्रभावसः ॥ १७८

मृदुरुपवमानकम्पितगगनद्रुमपुष्पमञ्जरीभिरिव ।
कलितं पताकिकाभिर्गगनपुरश्रीप्रतर्जिनीभिरिव ॥ १७९

शिखरगतमौक्तिकौघच्छलेन पुरयुवतिदर्शनोपगतम् ।
उडुगणमिवोद्वहद्भिः प्रासादैश्शोभमानमसमानैः ॥ १८०

बहुकृष्णागरुधूपैः प्रदर्शिताकालजलदसन्नाहम् ।
गम्भीरमुरजनादैराहूतप्रमदबर्हिणव्यूहम् ॥ १८१

निधिमिव कौतुकराशेः कुलगृहमिव सकलविभ्रामौघस्य ।
आस्थानमिव सुमेषोरुत्पत्तिस्थानमिव च मञ्जिम्नः ॥ १८२

"व्रजसि व्रजसिद्धेरिह चपला चपलायते किमित्येषा ।
अनभिहिताऽप्ययि मुग्धे स्तबकस्तव कर्णतः पतितः ॥ १८३

त्वमसि सुकपोलरेखे सुरया सुरयाचिता सुरेखे श्रीः ।
मत्ते स्मरमाह्वयसे कलहे कलहंसकाञ्चिकाक्वणितैः ॥ १८४

सखि मलये मलयेप्सितमधुनाऽधिगतासि कुरु दृशैव त्वम् ।
अपतेऽत्र पतेयमिति स्खलितवती नागकुसुमहरणेषु ॥ १८५

अङ्गमनङ्गशराणां वहतीव हतीरनङ्गलेखे ते ।
मौक्तिकहारलतेयं विहिताविहितायते च परम् ॥ १८६

उत्कलिके सोत्कलिके वदने वद नेत्रपङ्कजोल्लसिते ।
उपयाति किमुपमानं सम्पूर्णः पार्वणेन्दुरपि ।। १८७

मन्ये सखि कोऽपि पुमान्वसतीव सतीव्रते तव स्वान्ते ।
वाचः किलानुभूताश्शतधा शतधारसारास्ते ।। १८८

केरलि कलिरते तव करकाकरकालमेघखण्डतुलाम् ।
उपयाति कचकलापो विकसितमल्लीस्रगाकलितः ।। १८९

कुटिलासितकुन्तलिके कुन्तलिके कर्णमधुरगम्भीराः ।
न च सङ्गीतध्वनयः पुरगोपुरगोचरा निशम्यन्ते ।। १९०

सुरते सुरते स्तनताम्तनताडनजं सुखं यदनुभूतम् ।
स्मरता स्मरतापहरं तत्केन तदा वियुक्ताऽसि ।। १९१

स्मरजन्या स्मरजन्यां नखराणां नत्रनिशातनखराणाम् ।
कुरुते कुरुते न रुजं धन्यतमा युवतिमण्डले त्वमसि ।। १९२

कल्पय कुरङ्गिके त्वं दूर्वाङ्कूरं कुरङ्गशाबेभ्यः ।
कारय किशोरिके त्वं किशोरकं प्रत्यवेक्षणं सहसा ।। १९३

तरलय परं तरलिके कृष्णागुरुधूपपटलमुद्दामम् ।
कर्पूरिके विलेपय कर्पूररजोव्रजेन कुचभारम् ।। १९४

मानय मातङ्गशिशोर्गमनं मातङ्गिकेऽतिकमनीयम् ।
अयि सखि लिख शशिलेखे शशिलेखां मम ललाटपट्टे त्वम् ।। १९५

केतकिके सङ्केतय दोहलमिह केतकीनिकुञ्जे त्वम् ।
क्रीडाशकुनिशिशूनामाहार शकुनिके द्रुतं वितर ।। १९६

मञ्जरय कुञ्जमेतं मञ्जुलमयि मदनमञ्जरि क्षिप्रम् ।
श्रृङ्गारमञ्जरि त्वं विरचय शृङ्गारकल्पनां सहसा ।। १९७

ननु सञ्जीविनिके दिश जीवञ्जीवकुलाय मरिचदलम् ।
अयि विलिख मदनलेखे मलयसमीरस्य मदनलेखं त्वम् ।। १९८

मकराङ्कशोभिते दिश बिसाङ्कुरं मकरिके मरालशिशोः ।
सपदि विलासवति त्वं विलासयामुं मयूरशिशुम् ।। ११९

लेपय तमालिके त्वं मलयजपङ्केन भवनवाटममुम् ।
काञ्चनमण्टपिकायां काञ्चनिके विकिर मृगमदोदकणान् ।।" २००

इत्थं सखीजनानामन्योन्यं प्रणयपेशला वाचः ।
शृण्वन्विवेश भवनं स मुकुन्दर्पकेतुरथ तस्याः ।। २०१

स ददर्श राजकन्यां त्रिभुवनकमनीयरूपलावण्याम् ।
हृद्यामनवद्याङ्गीं विद्यामिव मन्मथस्य मोहकरीम् ।। २०२

अथ तां राजकुमारीं पिबतो विस्फारितेन नयनेन ।
चिन्तामणिनृपसूनोर्मूर्छावेगो जहार चैतन्यम् ।। २०३

साऽपि मुमूर्छे मनोज्ञं दृष्ट्वा दयितस्य तादृशं रूपम् ।
आस्तां गृहीतसंज्ञौ मकरन्दसखीजनोपचारैस्तौ ।। २०४

एकासनमधिवसतोरनयोरतिमदनयोरिवोल्लसतोः ।
काचित्सखी कलावत्याख्या कन्दर्पकेतुमाचख्यौ ।। २०५

अयमार्यपुत्र समयो विस्रम्भकथाविनोदगोष्ठीनाम् ।
न च समुचितो यदधुना लघुतरमभिधीयते तस्मात् ।। २०६

या यातनाऽनुभूता त्वदर्थमनया नयाम्बुधे सैषा ।।
शेषो यदि कथकस्स्यात्तदपि सशेषा भवेदहं कियती ।। २०७

स्वाराज्यतुल्यमपि बत राज्यं प्राज्यं समुज्झितं भवता ।
किं बहुनाऽऽत्मा तस्या विशङ्कटे सङ्कटे समाविष्टः ।। २०८

अस्ति खलु विजयकेतोर्विद्याधरनेतुरात्तजयकेतोः ।
अपहसितमकरकेतुस्तनयस्सनयोऽस्ति पुष्पकेतुरिति ॥ २०९

तस्मै प्रदातुमेषा कन्या निरणायि सम्प्रति हठेन ।
श्वः प्रातस्तातेन तु तारुण्यातिक्रमातिचकितेन ॥ २०१

यद्रोचतेऽत्र भवते भवते भव तेजसांनिधे तत्र ।
सम्प्रति सत्वर" इति सा कथयित्वा सपदि विरराम ॥ २११

शृङ्गारशेखरभुवा शृङ्गारभुवाऽथ सुभ्रुवा साकम् ।
सम्मन्त्र्य तां गृहीत्वा स जगाम रयात्तुरङ्गरत्नेन ॥ २१२

मरुतेव सदागतिना मानसगतिना मरालपतिनेव ।
हसितमनोजवभूम्ना मनोजनाम्ना शशाङ्कसमधाम्ना ॥ २१३

वार्ताऽन्वेषणहेतोस्तस्थौ नगरे स तत्र मकरन्दः ।
तदनुक्रमेण सोऽयं गत्वा गव्यूतिमात्रमध्वानम् ॥ २१४

नरमांसग्रसनाकुलकङ्ककुलात्यन्तसङ्कुलाग्रेण ।
विकटकटकवलनोद्भटकटुरवकटपूतनाऽऽभटीभाजा । २१५

उल्कामुखमुखविसरज्ज्वलनज्वालाजटालनिकटेन ।
[illegible] भागोत्थकलकलध्वनिना ॥ २१६

आर्द्रशिरामयकौतुकभूतयुगावेष्टयमानचितिशिखिना ।
कटदहनदह्यमानस्फुटितनरटङ्करकरोटिकीर्णेन ॥ २१७

निर्गत्यनिमिषमात्राद्विशङ्कटेन श्मशानवाटेन ।
विन्ध्याटवीं सुमहतीं विवेश वेशन्तदन्तुरप्रान्ताम् ॥ २१८

प्रल्योदयवेलामिव भृशप्रवृद्धार्कसमुदयाकलिताम् ।
स्वच्छन्दस्थितकौशिककौतुकसीमां सभामिव द्युसदाम् ॥ २१९

सत्पुरुषसेवनामिव निरन्तरश्रीफलोदयोल्लसिताम् ।
सद्धार्मिकसम्पदमिव निर्णिद्राशोकसरलपुन्नागाम् । २२०

अत्रान्तरे तयोरिह निद्रामादाय निर्जगाम निशा ।
कुसुमसुकुमारवपुषोरतिदूराध्वगतिकृतबहुश्रयोः ॥ २२१

अथ समयधीवरेण प्रक्षिप्य निशार्तिरं नभस्सरसि ।
मीनव्रज इव परितो ह्रियमाणे तारकानिकरे ॥ २२२

स्फुरदरुणकिरणचूडाचक्रमनोज्ञेऽथ दिवसकृकवाकौ ।
तारातण्डुलभरितं नभोऽङ्गणं चरितुमवतरति ॥ २२३

मत्सङ्गमात्प्रवृद्धो द्विजपतिरयमद्य वारुणीसङ्गात् ।
पततीति हसन्त्यामिव पौरन्दर्यां दिशि प्रसन्नायाम् ॥ २२४

अरुणहरिनखरविदलिततिमिरकरिप्रचुररुधिरसरितेव ।
त्वङ्गत्तरङ्गखुरपुटिदलितोदयपद्मराजरजसेव ॥ २२५

पूर्वगिरिशृङ्गसङ्गतविकचजपाकुसुमगुच्छकान्त्येव ।
उदयगिरिशिखरगैरिकनिर्जरपयसेव रक्तबिम्बजुषि ॥ २२६

पूर्वोर्वीधरशेखरदर्वीकरवरफणाग्ररत्नाभे ।
गगनेन्द्रनीलपादपकोमलपल्लवसमुद्रसद्रागे ॥ २२७

प्राचीललाटघटितस्फुटकुङ्कुमपङ्कतिलकसच्छाये ।
घनगगननगररत्नप्राग्द्वारसुवर्णपूर्णकुम्भनिभे ॥ २२८

सन्ध्यालतैककुसुमे मञ्जिष्ठापट्टसूत्रपिण्डनिभे ।
सन्ध्यारुणसूत्राञ्चत्प्रचीकाञ्चीसुवर्णदीनारे ॥ २२९

उदयगिरिधातुरागारुणदिग्गजराजचरणसङ्काशे
अपहृततिमिरकदम्बे समुदयमीयुषि सरोजिनीबन्धौ ॥ २३०

तदनु नभस्सौधाङ्गणविरचितकुङ्कुमरसानुलेप इव ।
भिन्नप्रवालशोणे प्रसरति बालातपे परितः ॥ २३१

उज्ज्वलदिनकान्तोपलसङ्गादिव भगवतस्त्रयीमूर्तेः ।
आश्रयति चोष्णरश्मेर्मयूखजाले तदा◌ाष्णिमातिशयम ॥ २३२

कन्दर्पकेतुरासोद्विवशात्मा सर्वरात्रजागरणात् ।
आहारव्यतिरेकादनेकशतयोजनाध्वखेदाच्च ॥ २३३

अथ सुष्वाप स कुञ्जे तत्र क्वचिदधिकगुञ्जदलिपुञ्जे ।
निष्पन्देन्द्रियवृन्दस्सुप्त्या तत्कालसुलभयाक्रान्तः ॥ २३४

वासवदत्ताऽपि ततस्तत्रैव सह प्रियेण सुष्वाप ।
तरणिकरतप्यमाना वल्लीव म्लानिमानमुपयान्ती ॥ २३५

अथ कल्पमहीरुह इव सकलाशान्तप्रसाधनैकान्ते ।
भगवति महसां पत्यौ सवितरि गगनस्य मध्यमारूढे ॥ २३६

बुद्ध्वोन्मीलितनयनो निध्याय लतागृहं प्रियाशून्यम् ।
काष्ठां परां प्रपेदे चिन्ताया हन्त दुर्विभाव्यां सः ॥ २३७

क्षणमथ विटपितटेषु क्षणमविरलपल्लवासु वल्लीषु ।
क्षणमपि दिक्षु विदिक्षु क्षणमन्विष्यन्निकुञ्जपुञ्जेषु ॥ २३८

क्षणमथ त्यरस्तटीषु क्षणमपि चलशुष्कपर्णनिचयेषु ।
विरहाग्नितप्यमानो विललाप परिभ्रमन्नदभ्रं सः ॥ २३९

हा ! सखि वासवदत्ते हा सुदतीलोकभूषणप्राये ।
हा भुवनसारभूते हा दयिते क्वनु गताऽसि मां त्यक्त्वा ॥ २४०

एहि प्रसीद ! दयिते ! देहि दयार्द्रां सुशीतलां दृष्टिम् ।
पाहि त्वदेकशरणं ब्रूहि कमपराधमीक्षसेऽत्र जने ॥ २४१

कृतमुपहासेन सखि क्वान्तर्धानं गताऽसि लतिकायाम् ।
कुप्यसि किमित्यकाण्डे दर्शय सुखचन्द्रबिम्बमद्य मम ॥ २४२

यान्यनुभूतानि मया व्यसनानि त्वत्कृते च भूयांसि ।
दयिते ! त्वमेव तेषां प्रमाणमधिकेन किं वचसा ॥ २४३

हा ! मकरन्दप्रियसख ! हा प्राणपद प्रसीद वा त्वमपि ।
दैवस्य दुर्विलसितं पश्येदं हन्त निरपराधिजने ॥ २४४

नियतेरहो विपाको दुर्लङ्घ्योऽहो गतिश्च कालस्य ।
अतिकटुरहह कटाक्षः प्रसारितो ग्रहगणेनापि ॥ २४५

दुस्वप्नफलं किमिदं विसदृशतागुरुजनाशिषामथ वा ।
न भवति भवितव्यानामगोचरस्सर्वथा जनः कोऽपि ॥ २४६

किमसेव्यन्त न गुरवः किं वा न कृतप्रदक्षिणा गावः ।
नोपासिताः किमनला न कृतं न्वभयमिह किं शरण्येषु ॥ २४७

इति बहुविधं स विलपन् प्राणान्मोक्तुं विनिश्चयं कृत्वा ।
अगमत्सागरकच्छोपान्ते नात्यन्तदूरमध्वानम् ॥ २४८

नव्यनलनलदनलिनीवकुलादिमबहुलविटपिसान्द्रेण ।
चपलकपिचलितविगलन्मधुशीकरसिक्तभूमिभागेन ॥ २४९

शीतलमलयानिलसुखसंवाहितपनसशाखिशाखेन ।
दात्यूहकुहकुहारवभरितसरित्तटनिकुञ्जपुञ्जेन ॥ २५०

कुक्कुटकुटुम्बवासितसमुत्कटानेकविटपिपटलेन ।
कङ्केलिनव्यपल्लवशोभाभृशलिप्यमानदिक्ततिना ॥ २५१

शैलेयसुरभिलशिलातलसुखनिद्राणशशकशाबेन ।
सहकारकाननान्तररोमन्थव्यग्रचमरयूथेन ॥ २५२

आसन्नकिन्नरीगलगीत श्रवणोत्कहरिणबृन्देन ।
दंशकुलदष्टमर्कटचपेटसम्पातनिहतकीटेन ॥ २५३

स ददर्श तत्र जलधिं पुरतः परितो विभासितं फेनैः ।
मलयजरसबहुचर्चितजलमानुषिकापयोधराकारैः ॥ २५४

शकुनिकुलकवलनाकुलसमुत्पतन्नक्रचक्रचङ्क्रमणम् ।
जलकरिमकरिसमेतं स्तिमिततिमिङ्गिलगिलव्रातम् ॥ २५५

ऊर्मिमरुन्मर्मरितप्रचुरतरोत्तालतालवनचरितैः ।
जलमानुषमिथुनैरुपमृदितलसत्पुलिनबालशैवालम् ॥ २५६

चिन्तयति स्म तदाऽसौ यदयं मम दृष्टिगोचरो जलधिः ।
उपकृतिरेव कृता मे कृतापकृतिनाऽपि हन्त तद्विधिना ॥ २५७

त्यक्ष्येऽहमत्र देहं नेक्षे चानातुरात्महतिदोषं ।
सर्वः सर्वं कार्यं करोत्यसारे परं न संसारे ॥ २५८

को नाम किं न चक्रे द्विजराजोऽप्यपजहार गुरुदारान् ।
प्राप्तस्तथा विनाशो ब्राह्मणवधतृष्णया पुरूरवसा ॥ २५९

विहितपुरोहिततनयापाणिग्रहण पपात स ययातिः ।
नहुषश्शक्रकलत्रस्पृहया लेभे भुजङ्गतामेव ॥ २६०

कलिनानलोऽभिभूतः पुरुकुत्सः कुत्सितो बभूव परम् ।
दशरथनृपतिरपि प्रियरामोन्मादेन मृत्युमापेदे ॥ २६१

लोके न कोऽपि च जनो निरवद्यो विद्यते न चाद्यापि ।
तदहं देहमिदानीं मुञ्चामीति स्वयं स निश्चित्य ॥ २६२

कुररकुलनखरशिखरोत्खण्डितपृथुरोमशकलसङ्कीर्णम् ।
क्रोष्टुकुलोत्सृष्टमहाकर्कटकर्परनिरन्तरप्रान्तम् ॥ २६३

दर्पणमिव वसुधायास्स्फाटिककुट्टिममिवाम्भसां पत्युः ।
पुलिनतलमेत्य जलधिं प्रवेष्टुमुपचक्रमे स मरणेच्छुः ॥ २६४

सानुग्रहेष्वथ महाग्राहेष्वभयङ्करेषु मकरेषु ।
नक्रेष्वक्रूरेषु प्रादुरभूत्काऽपि भारती नभसः ॥ २६५

"विरमार्य! मरणयत्नाद्भविता भवतः पुनः प्रियासङ्गः ।
अचिरेणे" ति गिरं स श्रुत्वा विरराम मरणसाहसतः ॥ २५६

अथ तत इतः परिभ्रमलोलः फलमूलकलिततनुयात्रः ।
दयितासमागमेच्छुः कियन्त्यनेहांसि तत्र स निनाय ॥ २६७

अत्रान्तरे समुदभूद्वर्षाकालो वियोगिजनकालः ।
प्रशमितरजःप्रसारस्तापस इव विधृतजलदकरकश्च ॥ २६८

अथ रतिनखमार्जनकृतरत्नशलाकेव रत्नशुक्तिरिव ।
नभसीन्द्रधनुर्वल्ली मदनस्य विलासयष्टिरिव भेजे ॥ २६९

अतितृष्णावेगवशात्पीतं सलिलैस्सहाब्धिशङ्खगणम् ।
नभसि बलाकाव्याजात्समुद्वमन्निव रराज जलदौघः ॥ २७०

घननिकषोपलमध्ये जलदागमहेमकारसङ्घृष्टा ।
काञ्चनरेखेव तटिल्लेखा शुशुभे नभोऽङ्गणे सद्यः ॥ २७१

जलदघटासङ्घट्टनरय पातिततारकानिकाय इव ।
रुरुचे करकानिकरो लाजाञ्जलिरिव मनोजविजिगीषोः । २७२

प्रचुरेन्द्रगोपभरितं नवशाद्वलमुल्ललास सर्वत्र ।
लाक्षारसाङ्ककलितं स्तनोत्तरीयमिव भूविलासिन्याः ॥ २७३

घनकलशजलैः प्रावृट्चेट्यां सिक्त्वा भुवं गतायां च ।
समुपाजगाम सहसा मन्दरमाबिभ्रती शरच्चेटी ॥ २७४

तदनु भरद्वाजद्विजवाचाटविशालविटपिविटपौघे ।
उद्भ्रान्तशुककुलाकुलकलमक्षेत्रप्रविष्टकलहंसे ॥ २७५

तटनिकटस्थलविचरत्सारसकुलरसितरम्यकासारे ।
परितश्शरदारम्भे विजृम्भमाणे परिभ्रमन्विपिने ॥ २७६

दृष्ट्वा विस्मितचित्तस्सुदृढं परिरभ्य तामथाप्राक्षीत् ।
"दयिते वासवदत्ते जीवितभूते किमेतदाश्चर्यम्"॥ २७७

सा प्रत्युवाच चैवं नृपतनयाचान्तमोचया वाचा ।
कन्दर्पकेतुमुत्कटवर्षातपशीतवातसङ्क्लिष्टम् ॥ २७८

"नन्वार्यपुत्र ! भवता मदर्थमत्यन्तदुःखमनुभूतम् ।
उत्सृज्य हन्त ! राज्यं परिभ्रमस्येक एव विपिनेषु ॥ २७९

उपवासखिन्नचेतसि निद्राशान्ते तृषातुरे भवति ।
बुद्ध्वा प्रथममहं ते फलमूलादिकमगामुपाहर्तुम् ॥ २८०

गत्वा फलमूलादिकमन्विष्यन्ती च तत इतो विपिने।
तरुगुल्मान्तरितमहं पुरतस्सेनानिवेशमद्राक्षम् ॥ २८१

किमयं तातव्यूहो मामन्वेष्टुं समागतः प्रहितः ।
आहोस्विदार्यपुत्रव्यूह इति स्वयमतर्कयं मनसि ॥ २८२

अत्रान्तरे कुतश्चित्किरातसेनापतिर्बलोपेतः ।
चारैः कथितोदन्तो दूरादभिधावति स्म वेगेन ॥ २८३

तदनु तदन्यः कश्चित्किरातसेनापतिस्तथाभूतः ।
मृगयारसानुविद्धस्तच्छ्रुत्वा धावति स्म वेगेन ॥ २८४

अथ गृध्रयोरिव तयोरेकामिषलुब्धयोरभूद्युद्धम् ।
रविकरततिस्तदाभून्निबिडशरासारदुर्दिनच्छन्ना ॥ २८५

रणकर्मविशारदकरदूरोत्क्षिप्तेन मण्डलाडग्रेण
समरोद्भटाः प्रतिभटदलिताः परिषस्वजुस्सुपर्ववधूः ॥ २८६

समरावलोकनागतनभश्चरानेकचारणौघस्य ।
विरराज चरणराजिस्तोरणमालेव युद्धरङ्गस्य ॥ २८७

विध्वस्तध्वजपटलं पतत्पताकं विशीर्णकरवालम् ।
अन्योन्यं निहतमभूत्सैन्यं दैन्यं परं गतास्मि तदा ॥ २८८

अथ यस्याश्रमभूमिस्समुनिस्समिदादिकं समादाय ।
आगत्य योगदृष्ट्या विदितोदन्तो विलोक्य मां निकटे ॥ २८९

आः पापे! दुर्ललिते त्वदर्थमयमाश्रमो मम ध्वस्तः ।
इत्युक्त्वा कुपितो मां शिलामयी पुत्रिकाभवेत्यशपत् ॥ २९०

तदनु वराकी सेयं भूयो व्यसनानि भजत इति मत्वा ।
अभ्यर्थितस्स भवतो हस्तस्पर्शावधि व्यधाच्छापम्'' ॥ २९१

इत्थं वासवदत्ताचरितं कन्दर्पकेतुराकर्ण्य ।
विस्मितहृदयो मुमुदे नल इव भैम्याः पुनः प्राप्त्या ॥ २९२

अत्रान्तरे समागाद्वृत्तान्तमिमं निशम्य मकरन्दः ।
ताभ्यां सह सहसाऽगात्स्वपुरं कुतुकी स पाटलीपुत्रम् ॥ २९३

तत्रान्वभूत्सभूपस्सुरलोकसुदुर्लभान्यथ सुखानि ।
आनन्दसिन्धुलहरी डोलालीलानुबन्धिचेतस्कः ॥ २९४

श्रीकाश्यपकुलजनुषा विदुषामेषा कृतिर्विधेयेन ।
नरकण्ठीरवकृतिना बाल्ये कौतूहलेन सङ्ग्रथिता ॥ २९५

प्रायस्सुबन्धुवचनान्यादाय मया मुदे रसज्ञानाम् ।
आर्याभिर्ग्रथितोऽयं वासवदत्ताकथासारः ॥ २९६

**॥ इति अभिनववासवदत्ता ॥**

— ० —